# अथ दशमः पटलः ॥

**व्याख्यातास्सर्ववर्णानां साधारणवैशेषिका धर्मा राज्ञस्तु विशेषाद्वक्ष्यामः ॥ १ ॥**

उक्तवक्ष्यमाणसङ्कीर्तनं श्रोतृबुद्धिसमाधानार्थम् । अहिंसासत्यास्तेयादयः सर्ववर्णानां साधारणधर्माः । अध्ययनादयस्त्रयाणाम् । अध्यापनादयो ब्राह्मणस्य । युद्धादयः क्षत्रियस्य । कृष्यादयो वैश्यस्य । शुश्रूषा शूद्रस्य । राजाऽत्राभिषिक्तो विवक्षितः । तस्यैव हि वक्ष्यमाणं धर्मजातं सम्भवति । तस्य विशेषाद्विशेषतो यद्वक्तव्यं तद्वक्ष्यामः । विशेषानिति द्वितीयान्तपाठस्तु युक्तः ॥ १ ॥

**दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ २ ॥**

वेश्म गृहं पुरं नगरं तदुभयमपि दक्षिणाद्वारं मापयेत् कारयेत् स्थपत्यादिभिः । दक्षिणपार्श्वे द्वारं यस्य तत्तथोक्तम् ॥ २ ॥

**अन्तरस्यां पुरि वेश्म ॥ ३ ॥**

सर्वेषामेव प्राकाराणां मध्ये या पूस्तस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः ॥ ३ ॥

**तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ ४ ॥**

तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । एत्य वसन्त्यस्मिन्नित्यावसथः आस्थानमण्डपः । तस्यामन्त्रणमिति संज्ञा(१) ॥ ४ ॥

**दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं सन्दृश्येत बहिरन्तरं चेति ॥ ५ ॥**

दक्षिणेनेत्येनबन्तम् । पुरमिति(२)'एनपा द्वितीये'ति द्वितीयान्तम् । पुरस्य दक्षिणतः अदूरे सभा कारयितव्या । दक्षिणोदग्द्वारा दक्षिणस्यामुत्तरस्यां च दिशि द्वारं यस्यास्सा तथोक्ता । किमर्थमुभयत्र द्वारमिति चेत् । यद्बहिर्वृत्तं यच्चाऽभ्यन्तरं तदुभयमपि यथा सन्दृश्येतेत्येवमर्थमिति । सैषा द्यूतसभा । तस्यां द्यूतार्थिनः प्रविशन्तीति तदायस्थानं राज्ञः ॥ ५ ॥

---

१. तत्र ह्यतिथय आमन्त्र्यन्ते इत्यधिकः पाठः च. पु.    २. पा. सू. १. ३. ३१.

**सर्वेष्वेवाऽजस्रा अग्नयस्स्युः ॥ ६ ॥**

वेश्मन्यावसथे सभायामित्येतेषु सर्वेष्वेव स्थानेषु लौकिका अग्नयोऽजस्राः स्युः । अविच्छेदेन धार्याः ॥ ६ ॥

**अग्निपूजा च नित्या यथा गृहमेधे ॥ ७ ॥**

तेषु चाग्निषु नित्यमग्निपूजा कार्या । यथा गृहमेधे औपासने सायंप्रातर्होम इत्यर्थः । मन्त्रावपि तावेव, द्रव्यमपि तदेव ॥ ७ ॥

**आवसथे श्रोत्रियावराध्यानतिथीन् वासयेत् ॥ ८ ॥**

आवसथाख्ये स्थाने अतिथीन् वासयेत् । ते विशेष्यन्ते श्रोत्रियावराध्यानिति । अवरपर्यायोऽवराध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति श्रोत्रियानपि तावद्वासयेदिति ॥ ८ ॥

**तेषां यथागुणमावसथाः शय्याऽन्नपानं च विदेयम् ॥ ९ ॥**

तेषामतिथीनां यथागुणं विद्यावृत्तानुगुणमावसथादि विदेयं विशेषेण देयम् । आवसथा अपवरकादयः । शय्या खट्वादयः । अन्नमोदनादि । पानं(१) तक्रादि ॥ ९ ॥

**गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥**

गुरवः पित्रादयः । अमात्या मन्त्रिणः । तान्नाऽतिजीवेत् भक्ष्यभोज्याच्छादनादिषु तान्नाऽतिशयीत ॥ १० ॥

**न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वाऽवसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥**

अस्य राज्ञो विषये राष्ट्रे क्षुधा आहाराभावेन बुभुक्षया रोगेण व्याधिना हिमेन नीहारेण वर्षादीनामप्युपलक्षणमेतत् । आतपः आदित्यरश्मितापः । एतैः प्रकारैरभावात् बुद्धिपूर्वं वा न कश्चिद्ब्राह्मणोऽप्यवसीदेत् अवसन्नो न स्यात् । राज्ञो ह्ययमपराधो यदाहाराद्यभावेन कश्चिदवसन्नः स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम्—यदा कश्चित् करमृणं वा दाप्यो भवति, तदा नाऽसौ हिमातपयोरुपनिवेशयितव्यः भोजनाद्वा निरोद्धव्यः । तथा कुर्वाणं राजा दण्डयेदिति ॥ ११ ॥

---

१. तक्रसूपादि इति च. पु. तक्रादिसूपादि इति क. पु.

**सभाया मध्येऽधिदेवनमुद्धत्याऽवोक्ष्याऽक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान् ॥ १२ ॥**

पूर्वोक्तायाः सभाया मध्ये अधिदेवनं यस्योपरि कितवा अक्षैर्दीव्यन्ति तत्स्थानमधिदेवनम् । तत् पूर्वं काष्ठादिना उद्धन्ति उद्धत्याऽवोक्षति । अवोक्ष्य तत्राऽक्षान् युग्मसङ्ख्याकान्वैभीतकान् विभीतकवृक्षस्य विकारभूतान् यथार्थान् यावद्भिर्द्यूतं निर्वर्तते, तावतो निवपति । कः ? यस्तत्र राज्ञा नियुक्तः सभिको नाम ॥ १२ ॥

**आर्याः शुचयस्सत्यशीला दीवितारस्स्युः ॥ १३ ॥**

आर्याः द्विजातयः । (१)शुचयोऽर्थशुद्धाः । सत्यशीलास्सत्यवादिनः । एवंभूता एव पुरुषास्तत्र दीवितारः देवितारः स्युः । त एव तत्र दीव्येयुरित्यर्थः । तेच तत्र देवित्वा यथाभाषितं पणं सभिकाय दत्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं वा दद्यात् । स एव च स्थानान्तरे दीव्यतो दण्डयेत्, सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः—

> (२)'ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
> गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥
> स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
> जितमुद्ग्राहयेज्जैत्रे दद्यात्सत्यं वचः क्षमी ॥' इति ॥ १३ ॥

**आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन् ॥ १४ ॥**

आयुधग्रहणादीनि राजाधीनेभ्यो राजाश्रया ये पुरुषास्तेभ्योऽन्यत्र न विद्येरन् न भवेयुः । उत्सवादिष्वन्यत्रापि भवतीत्याचारः ॥ १४ ॥

**क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥**

यस्य राज्ञो विषये ग्रामेऽरण्ये च चोरभयं नास्ति स एव राजा क्षेमकृत् क्षेमङ्करः । न त्वन्यः शतं तुभ्यं शतं तुभ्यमिति ददानोऽपि ॥ १५ ॥

इत्यापस्तम्बधर्मसूत्रवृत्तौ द्वितीयप्रश्ने पञ्चविंशी कण्डिका ॥ २५ ॥

---

१. शुचयो धर्मशुद्धाः इति च. पु. २. या. स्मृ. २. १९९; २००

**भृत्यानामनुपरोधेन क्षेत्रं वित्तं च दद्द्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥ १ ॥**

भृत्यानामनुपरोधेन भृत्यवर्गस्य यथोपरोधो न भवति तथा ब्राह्मणेभ्यो यथार्हं विद्यावृत्ताद्यनुरूपं क्षेत्रं वित्तं च दद्यात्। एवं ददद‌नन्ताँल्लोकानभिजयति॥१॥

**ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥ २ ॥**

ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणः ब्राह्मणेभ्यो दानायापजित्य ग्रहीतुमिच्छन् यो राजा युद्धे चोरैर्हन्यते तमात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुर्धर्मज्ञाः। सङ्ग्रामो यज्ञः। तस्य आत्मा यूपस्थानीयः। आत्मेति शरीरमाह। अन्तरात्मा तु पशुस्थानीयः। प्रत्यानिनीषितं तु द्रव्यं दक्षिणा। सूत्रे तु 'तं यज्ञ इत्याहु'रिति गौणो वादः ॥ २ ॥

**एतेनाऽन्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥ ३ ॥**

प्रयोजनं चोरादिभिरपहृतानां ब्राह्मणस्वानां प्रत्यानयनादि, तदर्थं युध्यमाना ये शूरास्तनुत्यजो भवन्ति तेऽप्येतेन राज्ञा व्याख्याता आत्मयूपा यज्ञा अनन्तदक्षिणा इति ॥ ३ ॥

**ग्रामेषु नगरेषु चाऽऽर्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥ ४ ॥**

आर्याञ्छुचीन् सत्यशीलानिति व्याख्यातम्। एवंभूतान् पुरुषान् ग्रामेषु नगरेषु च प्रजानां रक्षणार्थं निदध्यात् नियुञ्जीत ॥ ४ ॥

**तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥**

तेषां नियुक्तानां ये पुरुषा नियोज्याः तेऽपि तथागुणा आर्यादिगुणा एव स्युः ॥ ५ ॥

**सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥**

सर्वतः सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम्। रक्ष्यमित्यपपाठः ॥ ६ ॥

**क्रोशो ग्रामेभ्यः ॥ ७ ॥**

ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्यः इति(१) यतश्चाऽध्व-कालपरिमाणं तत्र पञ्चमी वक्तव्ये'ति पञ्चमी ॥ ७ ॥

**तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ ८ ॥**

तत्र योजनमात्रे क्रोशमात्रे वा यन्मुष्यते चोर्यते ते नियुक्ताः स्वामिभ्यस्तत्प्रतिदद्यू राज्ञा तैस्तत् प्रतिदाप्यम् राजा तैः प्रतिदापयेदिति प्रायेण दन्त्योष्ठ्यं वकारं पठन्ति ॥ ८ ॥

**धार्म्यं शुल्कमवहारयेत् ॥ ९ ॥**

तत्र गौतमः—

(२)'विंशतिभागश्शुल्कः पण्ये' इति । यद्वणिग्भिर्विक्रीयते हिङ्ग्वादि, तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धार्म्यः धर्म्यश्शुल्कः । तमधिकृतैरेवाऽवहारयेत् ग्राहयेदिति । मूलादिषु विशेषस्तैनेवोक्तः—(३)'मूलफलपुष्पौषधिमधुमांसतृणेन्धनानां षाष्टिक्य'मिति ॥ ९ ॥

**अकरः श्रोत्रियः ॥ १० ॥**

श्रोत्रियः करं न दाप्यः । अन्ये दाप्याः ॥ १० ॥

**सर्ववर्णानां च स्त्रियः ॥ ११ ॥**

अकराः । वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः ॥ ११ ॥

**कुमाराश्च प्राक् व्यञ्जनेभ्यः ॥ १२ ॥**

व्यञ्जनानि श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः ॥ १२ ॥

**ये च विद्यार्था वसन्ति ॥ १३ ॥**

विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अप्यसमाप्तवेदा अकराः ॥ १३ ॥

**तपस्विनश्च ये धर्मपराः ॥ १४ ॥**

तपस्विनः कृच्छ्रचान्द्रायणादिप्रवृत्ताः । धर्मपराः, अफलाकाङ्क्षिणः नित्यनैमित्तिकधर्मनिरताः । धर्मपरा इति किम्? ये अभिचारकामा मन्त्रसिद्धये तपस्तप्यन्ते ते अकरा मा भूवन्निति ॥ १४ ॥

---

१. पा. सू. (वा) १. ४. ३१. २. गौ. ध. १०. २६. ३. गौ. ध. १०. २७.

शूद्रश्च पादावनेक्ता ॥ १५ ॥

यस्त्रैवर्णिकानां पादावनेक्ता स शूद्रोऽप्यकरः ॥ १५ ॥

अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥

एतेऽप्यकराः यावदान्ध्यादि ॥ १६ ॥

ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥

ये च परिव्राजकादयः द्रव्यपरिग्रहैर्व्यर्था निष्प्रयोजनाः शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धः तेऽप्यकराः ।

तथा च वसिष्ठः—

(१)"अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रशान्ता" इति ॥ १७ ॥

अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः ॥ १८ ॥

यत्र परदारा आसते कुमारी वा पतिंवरा, तत्र युवा अलङ्कृतः अबुद्धिपूर्वमज्ञानादनुप्रविशन् वाचा बाध्यः-अत्रेयमास्ते, माऽत्र प्रविशेति ॥१८॥

बुद्धिपूर्वे तु दुष्टभावो दण्ड्यः ॥ १९ ॥

यस्तु जानन्नेव दुष्टभावः प्रलोभनार्थी प्रविशति स दण्ड्यो द्रव्यानुरूपमपराधानुरूपं च । दुष्टभावग्रहणमाचार्यादिप्रेषितस्य प्रवेशे दण्डो मा भूदिति ॥ १९ ॥

सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्य ॥ २० ॥

सन्निपातो मैथुनं, तस्मिन् वृत्ते शिश्नच्छेदनं दण्डः । सवृषणस्येत्युपसर्जनस्यापि शिश्नस्य विशेषणम् । सवृषणस्य शिश्नस्य च्छेदनमिति ॥२०॥

कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१ ॥

कुमार्यां तु सन्निपाते वृत्ते सर्वस्वहरणं कृत्वा देशान्निर्वास्यः, न शिश्नच्छेदः ॥ २१ ॥

अथ भृत्ये राज्ञा ॥ २२ ॥

अथ सन्निपातात्प्रभृति ते परदारकुमार्यौ राज्ञा भृत्ये ग्रासाच्छादनप्रदानेन भर्तव्ये ॥ २२ ॥

१. व. ध. १९. २३.

रक्ष्ये चाऽत ऊर्ध्वं मैथुनात् ॥ २३ ॥

अतः प्रथमात् सन्निपातात् ऊर्ध्वं मैथुनाच्च रक्ष्ये यथा पुनः मैथुनं नाचरतस्तथा कार्यं ॥ २३ ॥

निर्वेषाभ्युपाये तु स्वामिभ्योऽवसृजेत् ॥ २४ ॥

यदि ते एवं निरुद्धे निर्वेषणमभ्युपेतः अभ्युपगच्छतः तदा निर्वेषाभ्युपाये तु स्वामिहस्ते अवसृजेत् दद्यात् । परदारं भर्त्रे श्वशुराय वा, कुमारीं पित्रे भ्रात्रे वा । अनभ्युपगमे तु प्रायश्चित्तस्य यावज्जीवं निरोधः ॥ २१ ॥

इत्यापस्तम्बधर्मसूत्रे द्वितीयप्रश्ने षड्विंशी कण्डिका ॥ २६ ॥

---

चरिते यथापुरं धर्माद्धि सम्बन्धः ॥ १ ॥

चरिते तु निर्वेषे यथापुरं यथापूर्वं धर्मात् , तृतीयार्थे पञ्चमी । धर्मेण सम्बन्धो भवति । हिशब्दो हेतौ । यस्मादेवं तस्मात् अवश्यं प्रायश्चित्तं कारयितव्यं । ततो यज्ञविवाहादौ न कश्चिद्दोष इति ॥ १ ॥

परदारप्रसङ्गादुच्यते —

सगोत्रस्थानीयां न परेभ्यस्समाचक्षीत ॥ २ ॥

योऽनपत्यः आत्मनश्शक्त्यभावं निश्चित्य क्षेत्रजं पुत्रमिच्छन् भार्यां(१)परत्र नियुङ्क्ते, मृते वा तस्मिन् तत्पित्रादयस्सन्तानकाङ्क्षिणः, तद्विषयमेतत । कुलान्तरप्रविष्टा सगोत्रस्थानीया । सा हि पूर्वं पितृगोत्रा सती(२) भर्तृगोत्रधर्मैरधिक्रियेत । अतः भर्तृपक्ष्याणां सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रः । तां सगोत्रस्थानीयां न परेभ्योऽसगोत्रेभ्यस्समाचक्षीत—इयमनपत्या, अस्यामपत्यमुत्पाद्यतामिति । सगोत्रायैव तु समाचक्षीत, तत्रापि देवराय, तदभावे(३) सपिण्डेभ्यः ॥

कः पुनस्सगोत्रस्य विशेषः ? तमाह—

कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥

हि यस्मात् स्त्री कन्या प्रदीयमाना कुलायैव प्रदीयत इत्युपदिशन्ति धर्म-

---

१. परस्मै. इति. क. पु.　२. भर्तृगोत्रधर्मेऽधिक्रियते ।

३. सपिण्डाय. इति. च.पु.

ज्ञाः । तस्मात् सगोत्रायैव समाचक्षीतेति(१) ॥ ३ ॥

तमिमं नियोगं दूषयति--

**तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ ४ ॥**

यद्यप्येवं पूर्वे कृतवन्तः, तथाऽपि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम् । कुतः ? इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः । ततश्च शास्त्रव्याजेनापि भर्तृव्यतिक्रमेऽतिप्रसङ्गस्स्यादिति ॥ ४ ॥

सगोत्रविषयेऽपि यो विशेषस्सोऽपि नास्तीत्याह--

**अविशिष्टं हि परत्वं पाणेः ॥ ५ ॥**

येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायाः, तस्मात् पाणेरन्यो भवति सगोत्रस्याऽपि पाणिः । यस्मादेवं पाणेः परत्वमविशिष्टं समानम् ? तस्मादविशेष इति । अविशिष्टमित्यपपाठः ॥ ५ ॥

पाणिरन्यो भवतु, को दोषः ?

**तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥**

तस्य पाणेर्व्यतिक्रमे उभयोर्दम्पत्योः नरको भवति । खलुपुनरिति प्रसिद्धिद्योतकौ निपातौ । अतः पत्याऽपि न स पाणिस्त्याज्यः यः पूर्वं गृहीतः । भार्ययाऽपि न स पाणिस्त्याज्यो येन पूर्वमात्मानः पाणिर्गृहीतः ॥ ६ ॥

**नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ ७ ॥**

आरभ्यतऽनेनेत्यारम्भणः योऽयं दम्पत्योः परस्परनियमः, स आरम्भणो यस्य स नियमारम्भणः । एवंभूतो योऽभ्युदयस्स एवं वर्षीयान् । वृद्धतरः । कस्मात् वर्षीयान् ? एवमुक्तप्रकारेण नियोगलक्षणेन यदपत्यमारभ्यते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति । अपत्यादिति पाठः । आपत्यादिति प्रायेण पठन्ति ॥ ७ ॥

**नाऽऽर्य आर्यश्शूद्रायाम् ॥ ८ ॥**

आर्यस्त्रैवर्णिकः, शूद्रायां परभार्यायां प्रसक्तो राज्ञा राष्ट्रान्नाश्यः निर्वास्यः ॥ ८ ॥

---

१. "कुलाय कन्या क्वचिद्देशेषु दीयते । गोत्रजे न केनचिदप्यनुभूयते । उक्तं च बृहस्पतिना—अभर्तृका भ्रातृभार्या ग्रहणं चातिदूषितम् । कुले कन्या प्रदानं च देशष्वन्येषु दृश्यते इति" इत्यधिकः पाठः घ. पु.

**वध्यश्शूद्र आर्यायाम् ॥ ९ ॥**

शूद्रस्तु त्रैवर्णिकस्त्रियां प्रसक्तो वध्यः । एतच्च योऽन्तःपुरादिष्वधिकृतो रक्षकस्सन् स्वयं गच्छति, तस्य भवति । अन्यस्य तु पूर्वोक्तं शिश्नच्छेदनमेव । तथा च शूद्राधिकारे गौतमः(१)—'आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च । गोप्ता चेद्वधोऽधिक' इति । याज्ञवल्क्येन प्रातिलोम्येन गमनमात्रे वध उक्तः—

"(२)सजातावुत्तमो दण्डः आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः(३) पुंसां स्त्रीणां नासादिकृन्तनम् ॥'इति ।

सोऽनुबन्धाभ्यासाद्यपेक्षो द्रष्टव्यः । तथा 'नाश्य आर्यश्शूद्रायामि' त्याचार्यवचनमप्यभ्यासापेक्षम्, ब्राह्मणादेः क्रमविवाहे या शूद्रा, तद्विषयं वा द्रष्टव्यम् ॥ ९ ॥

**दारं चाऽस्य कर्शयेत् ॥ १० ॥**

अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिकस्त्री तां च कर्शयेत व्रतनियमोपवासैः । या प्रजाता न भवति तद्विषयमेतत् ।

(४)'ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥'

इति स्मरणात् ॥ १० ॥

**सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति ॥ ११ ॥**

अन्यः पूर्वः पतिः यस्यास्सा अन्यपूर्वा परभार्या, तस्यां सवर्णायां सकृद्गमने पादः पतति । पतितस्य द्वादशवार्षिकं प्रायश्चित्तम् । तस्य तुर्योऽशस्त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यमस्य प्रायश्चित्तम् । एतच्च श्रोत्रियभार्यायामृतुकाले कामतः प्रथम(५)दूषकस्य । तत्र गौतमः(६)—'द्वे परदारे । त्रीणि श्रोत्रियस्ये'ति ॥ ११ ॥

**एवमभ्यासे पादः पादः ॥ १२ ॥**

एवमभ्यासे प्रत्यभ्यासं पादः पादः पतति ॥ १२ ॥

---

१. गौ. ध. १२. २. ३. २. या. स्मृ. २. २८६.
३. पुंसो नार्याः कर्णादिकर्तनम् इति विज्ञानेश्वराहतः पाठः ।
४. श्लोकोऽयं मानवे एकादशाध्याये १७८ श्लोकानन्तरं प्रक्षिप्ततया पठितः ।
५. दूषकस्य ब्राह्मणस्य. इति घ. च. पु. ६. गौ. ध. २२. २९, ३०.

## चतुर्थे सर्वम् ॥ १३ ॥

अतः-चतुर्थे सन्निपाते सर्वमेव पतति । ततश्च पूर्णद्वादशवार्षिकं कर्तव्यम् । तृतीये नव वर्षाणि । द्वितीये षड्वर्षाणि । एतच्च प्रतियोगं स्त्रीभेदेन प्रथमदूषकस्य । एकस्यामेव त्वभ्यासे कल्प्यम् । तत्र—

(१)'यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्,

इति स्मरणात् स्त्रिया अपि प्रतियोगं पादः पादः पतति । तदनुरोधेन कल्प्यम् ॥ १३ ॥

## जिह्वाच्छेदनं शूद्रस्याऽऽर्यं धार्मिकमाक्रोशतः ॥ १४ ॥

शूद्रो द्विजातीनामन्यतमं धार्मिके(२)स्वकर्मस्थं यद्याक्रोशति निन्दति गर्हते, तदा तस्य जिह्वा छेत्तव्येति । मनुस्तु सामान्येनाह-

(३)'येनाङ्गेनावरो वर्णो ब्राह्मणस्याऽपराध्नुयात् ।
तदङ्गं तस्य छेत्तव्यं तन्मनोरनुशासनम् इति ॥

गौतमस्तु—(४)'शूद्रो द्विजातीनतिसन्धायाऽभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्या'दिति ॥ १४ ॥

## वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥ १५ ॥

यस्तु शूद्रो वागादिष्वार्यैस्समीभवति, न तु न्यग्भूतः, तस्य दण्डेन ताडनं कर्तव्यम् । स दण्डेन ताडयितव्यः । अयमस्य दण्डः ॥ १५ ॥

## पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥१६॥

भूम्यादानं परक्षेत्रस्य बलात्स्वीकारः, पुरुषवधादिषु निमित्तेषु शूद्रस्सर्वस्वहरणं कृत्वा पश्चाद्वध्यः मारयितव्यः ॥ १६ ॥

## चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥

ब्राह्मणस्य त्वेतेषु निमित्तेषु चक्षुषो निरोधः कर्तव्यः । पट्टबन्धादिना चक्षुषी निरोद्धव्ये, यथा यावज्जीवं न पश्यति । न तूत्पाटयितव्ये (५)'न शारीरो ब्राह्मणदण्डः । अक्षतो ब्राह्मणो व्रजे'दिति स्मरणात् । 'चक्षुनिरोध' इति रेफलोपश्छान्दसः ॥ १७ ॥

## नियमातिक्रामिणमन्यं वा रहसि बन्धयेत् ॥ १८ ॥

---

१. म. स्मृ. ११. १७७. २. स्वधर्मस्थं इति च. पु ३. म. स्मृ. ८. १७९.
४. गौ. १२. १. ५. गौ. ध. १२. ४६.

यो वर्णाश्रमप्रयुक्तान्नियमानतिक्रामति तं नियमातिक्रमिणमन्यं वा प्रति-षिद्धानां कर्तारं रहसि बन्धयेत् निगलितं निरुन्ध्यात् ॥ १८ ॥

आसमापत्तेः ॥ १९ ॥

यावदसौ नियमान् प्रतिपत्स्ये प्रतिषिद्धेभ्यो निवर्तिष्य इति ब्रूयात् ॥ १९ ॥

असमापत्तौ नाश्यः ॥ २० ॥

यद्यसौ दीर्घकालं निरुद्धोऽपि न समापद्येत, ततो नाश्यः निर्वास्यः॥२०

आचार्य ऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥

यदि दण्डे प्रवृत्तं राजानमाचार्यो ब्रूयात्–अहमेनमतः परं वारयि-ष्यामि मुच्यतामयमिति । अतोऽङ्गदण्डे प्राप्तेऽर्थदण्डम्, अर्थदण्डे प्राप्ते ताडनम्, ताडने प्राप्ते धिग्दण्डमिति कृत्वा तद्वशे विसृजेत् । एवमृ-त्विजि । ऋत्विगाचार्यौ राज्ञस्स्वभूतौ न दण्ड्यस्य । स्नातको विद्याव्रता-भ्याम् । राजा अनन्तरादिः । सर्व एते राज्ञस्सम्मान्याः । अतस्ते दण्ड्यस्य त्राणं स्युः । उक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेऽप्यन्यत्र वध्यात् यस्य वधानुगुणोऽपराधः न तस्याऽऽचार्यादयोऽपि त्राणम्; हन्तव्य एव स इति ॥ २१ ॥

इत्यापस्तम्बधर्मसूत्रवृत्तौ द्वितीयप्रश्ने सप्तविंशी कण्डिका ॥ २७ ॥

---

इति चाऽऽपस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायामु-ज्ज्वलायां द्वितीयप्रश्ने दशमः पटलः ॥ १० ॥

---

# अथैकादशः पटलः ॥

## क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्स-मृद्धस्स भावि तदपहार्यः ॥ १ ॥

वैश्यो वैश्यवृत्तिर्वा परस्य क्षेत्रं कृष्यर्थं परिगृह्य यदि उत्थानं कृषिविषयं यत्नं न कुर्यात्, तदभावाच्च फलं न स्यात्, तत एतस्मिन्निमित्ते स कर्षकस्समृद्धश्चेत्तस्मिन् भोगे यद्भावि फलं तदपहार्यः अपहारयितव्यः । राज्ञा क्षेत्रस्वामिने दाप्यः ॥ १ ॥

## अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥

कीनाशः कर्षकः । तस्याऽवशिनः अस्वतन्त्रस्य निर्धनस्य कर्मन्यासे स चेत् कृषिकर्म न्यसेत् विच्छिन्द्यात् तस्य दण्डेन ताडनं कर्तव्यं स दण्डेन ताडयितव्यः । अर्थाभावान्नाऽर्थदण्डः ।

अपर आह—अवशी अवश्यः अविधेयः यः क्षेत्रं परिगृह्याऽवशिनः कीनाशस्य कृषिकर्म न्यसेत् न स्वयं कुर्यात्, तदा स परिग्राहको दण्डेन ताडयितव्य इति । यदि वा अवशिन इति बहुव्रीहिः । यस्य कीनाशस्य वशी स्वतन्त्रः क्षेत्रवान्नास्ति, स यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेत् न कुर्यात्, तस्य दण्डताडनं दण्ड इति राजपुरुषस्योपदेशः ॥ २ ॥

## तथा पशुपस्य ॥ ३ ॥

पशुपो गोपालः तस्याऽपि कर्मन्यासे पालनस्याऽकरणे दण्डेन ताडनं दण्डः ॥ ३ ॥

## अवरोधनं चाऽस्य पशूनाम् ॥ ४ ॥

ये चाऽस्य पशवो रक्षणाय समर्पितास्तेषां चाऽवरोधनमपहरणं कर्तव्यमन्यस्य गोपस्य समर्पणीया इति ॥ ४ ॥

## हित्वा व्रजमादिनः कर्शयेत्पशून् ॥ ५ ॥

ये पशवो व्रजे गोष्ठे निरुद्धास्तं व्रजं हित्वा आदिनस्सस्यादेर्भक्षयितारो भवन्ति; तान् कर्शयेत् बन्धनादिना कृशान् कुर्यात् । कः? यस्य भक्षितं तद्वान्, राजपुरुषो वा ॥ ५ ॥

## नाऽतिपातयेत् ॥ ६ ॥

नाऽतिनिरोधं कुर्यात् न ताडयेद्वेति ॥ ६ ॥

**अवरुध्य(१) पशून्मारणे नाशने वा स्वामिभ्योऽवसृजेत् ॥ ७ ॥**

यदि पशुपः पशूनवरुध्य पालयितुं गृहीत्वा सभयस्थाने विसृज्यो-पेक्षया मारयेत् नाशयेद्वा । नाशनं चोरादिभिरपहरणम् । स स्वामिभ्यः पशूनवसृजेत् प्रत्यर्पयेत् पश्वभावे मूल्यम् ॥ ७ ॥

**प्रमादादरण्ये पशूनुत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् ॥ ८ ॥**

यदि स्वामिनः प्रमादादरण्ये पशूनुत्सृजेयुः विना पालकेन ततस्तान् दृष्ट्वा ग्राममानीय स्वामिभ्यः अर्पयेत् । कः ? यस्तत्र रक्षकत्वेन राज्ञा नियुक्तः ॥ ८ ॥

**पुनः प्रमादे सकृदवरुध्य ॥ ९ ॥**

पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योऽवसृजेत् ॥ ९ ॥

**तत ऊर्ध्वं न सूर्क्षेत् ॥ १० ॥**

ततो द्वितीयात् प्रयोगादूर्ध्वं 'ग्राममानीये'त्यादि यदुक्तं तन्न सूर्क्षेत् ना-द्रियेत तस्मिन् विषये उपेक्षेत ॥ १० ॥

**परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः ॥ ११ ॥**

एधाश्चोदकं च एधोदकम् । ग्रासो गवाद्यर्थो यवसादिः । सर्वत्र वि-षयसप्तमी । यः परपरिग्रहोऽयमित्याविद्वानजानन् एधादिकमादत्ते गृह्णा-ति, स तस्मिन्विषये तत्र नियुक्तेन राजपुरुषेण निष्ठुरया वाचा बाध्यः निवार्यः ॥ ११ ॥

**विदुषो वाससः(२) परिमोषणम् ॥ १२ ॥**

यस्तु विद्वानेवाऽऽदत्ते तस्य वाससोऽपहारः कर्तव्यः ॥ १२ ॥

**अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥ १३ ॥**

तथाशब्दस्य भोजनमित्यनेन सम्बन्धः । प्राणसंशयदशायामेधो-

---

१. 'पशून्मारयेन्नाशयेद्वा' इति छ, पु.　　२. परिमोक्षणम्, इति, क, पु.

दकादेरादाने कामकृतेऽप्यदण्ड्यः । तथा भोजनमप्याददानः प्राणसंशये न दण्ड्य इति ॥ १३ ॥

**प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति ॥ १४ ॥**

प्राप्तं दण्डनिमित्तं यस्य तस्मिन् पुरुषे दण्डाकर्मणि दण्डस्याऽक्रियायां यदि दययाऽर्थलोभेन वा प्राप्तदण्डं न कुर्यात् तदा तदेनो राजानमेव स्पृशति ॥ १४ ॥

इत्यापस्तम्बधर्मसूत्रवृत्तौ द्वितीयप्रश्नेऽष्टाविंशी कण्डिका ॥ २८ ॥

---

ननु(१) शास्त्रफलं प्रयोक्तरि, तत्कथमन्यकृतमेनोऽन्यं स्पृशतीति, बहुविधत्वात् कर्तृभेदस्येत्याह—

**प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥ १ ॥**

धर्ममधर्मं वा प्रकुर्वाणं यः प्रयुंक्ते—इदमित्थं कुर्विति, स प्रयोजयिता । स चाऽनेकप्रकारः-आज्ञापकोऽभ्यर्थयिता अनुग्राहक इति । भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा । गुर्वादेराराध्यस्य प्रवर्तनाऽभ्यर्थना । अनुग्रहो द्विविधः—उपदेशस्तत्सधर्माचरणं चेति । तत्र य इत्थमर्थमुपदिशति त्वं शत्रुमित्थं व्यापादय, धर्मार्जनेऽयं तेऽभ्युपाय इति स उपदेष्टा । यः पुनः केनाचिज्जिघांसितं पलायमानं वा निरुणद्धि निरुद्धश्च हन्यते स निरोद्धाऽनुग्राहकः । मन्ता अनुमन्ता यस्याऽनुमतिमन्तरेणाऽर्थो न निवर्तते स राजादिको धर्माधर्मयोरनुमन्ता । कर्ता साक्षात्क्रियाया निर्वर्तकः । एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः अंशभाजः । सर्वेषां च यथाकथंचित् कर्तृत्वम् ॥ १ ॥

**यो भूय आरभते तस्मिन् फलविशेषः ॥ २ ॥**

तेषु प्रयोजकादिषु यो भूय आरभते यस्य व्यापारोऽर्थनिवृत्तावाधिकमुपयुज्यते तस्मिन् फलविशेषो भवति ॥ २ ॥

यद्यप्येवम्—

**कुटुम्बिनौ धनस्येशाते ॥ ३ ॥**

कुटुम्बिनौ दम्पती । तौ धनस्य परिग्रहे विनियोगे च ईशाते । यद्य-

---

१. पूर्वमीमांसासूत्रस्या ( जै. सू. ३. ७. १८. ) नुवादोऽयम् ।

व्येवं, तथापि भर्तुरनुज्ञया विना स्त्री न विनियोक्तुं प्रभवति । भर्ता तु प्रभवति । तदेतेन वेदितव्यं 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ती'ति (२. १४. २०) ॥ ३ ॥

**तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन् ॥ ४ ॥**

तयोर्दम्पत्योरनुमतेऽनुमतौ सत्यामन्येऽपि पुत्रादयः तयोरैहिकेष्वामुष्मिकेषु च हितेषु वर्तेरन् द्रव्यविनियोगेनाऽपि ॥ ४ ॥

**विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५ ॥**

अर्थिप्रत्यर्थिनोर्विप्रतिषिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारस्स्युरिति वाक्यशेषः । विद्या अध्ययनसम्पत्, अध्ययनसहितं शास्त्रज्ञानं वा । अभिजनः कुलशुद्धिः । वृद्धाः परिणतवयसः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु अविनिपातिनः, विनिपातः प्रमादः तद्रहिताः ॥ ५ ॥

**सन्देहे लिङ्गतो दैवेनेति विचित्य ॥ ६ ॥**

ते च निर्णयन्तस्सन्देहस्थलेषु लिङ्गतोऽनुमानेन दैवेन तप्तमाषादिना इतिशब्दः प्रकारे । यच्चान्यदेवंयुक्तं वचनव्याघातादि तेन च विचित्यार्थस्थितिमन्विष्य निर्णेतारस्स्युरित्यध्याहृतेन वाक्यपरिसमाप्तिः ॥६॥

अथ साक्ष्यविधिः—

**पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतस्समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात् ॥७॥**

पुण्याहो देवनक्षत्रम् , प्रातर्मध्याह्नादिषु अग्नाविद्धे अग्निमिध्वा तत्समीपे अपामन्ते उदकमुपनिधाय तत्समीपे राजवति राजाधिष्ठिते सदसि । राजग्रहणं प्राड्विवाकादेरुपलक्षणम् । उभयतः उभयोरर्थिप्रत्यर्थिनोस्समाख्याप्य किमहं युवयोः प्रमाणभूतः साक्षीत्यात्मानं ख्यापयित्वा । यदि वा उभयतः उभयोरपि पक्षयोस्सत्यवचने च असत्यवचने च साक्षिणो यद्भावि फलं तत्,

सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
(१)अनृतेन महाघोरं नरकं प्रतिपत्स्यसे ॥

---

१. उक्त्वाऽनृतं. इति. च. पु.

इत्यादिना प्रकारेण समाख्याप्य प्राड्विवाकादिभिः पृष्ट इति शेषः। सर्वानुमते अर्थिप्रत्यर्थिनोस्सभ्यानां चाऽनुमतौ सत्यां सभ्यो मुख्यः साक्षिगुणैरुपेतो दोषैश्च वर्जितस्साक्षी प्रश्नं पृष्टमर्थं सत्यं यथाऽऽत्मना ज्ञातं तथा ब्रूयात् ॥ ७ ॥

अनृते राजा दण्डं प्रणयेत ॥ ८ ॥

साक्षिणाऽनृतमुक्तमिति प्रतिपन्ने राजा(१) दण्डं प्रणयेत् ।

अत्र मनुः—

'(२)यस्य दृश्येत सप्ताहा(३)दुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणं (४)दाप्यो दण्डं च तत्समम् ॥' इति ॥ ८ ॥

न केवलमसत्यवचने राजदण्डः, किं तर्हि ?

नरकश्चाऽत्राधिकः साम्पराये ॥ ९ ॥

साम्परायः परलोकः, तत्र नरकश्च भवति, न तु,

(५)'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥

इत्यस्यायं विषय इति ॥ ९ ॥

सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥ १० ॥

सत्य उक्ते स्वर्गो भवति । सर्वाणि च भूतान्येन प्रशासन्ति अपि देवाः ॥१०॥

सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥ ११ ॥

स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा समाप्तिस्तस्यामप्यधिगतायां विद्याकर्म परितिष्ठतीति ॥ ११ ॥

आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥ १२ ॥

अथर्वणा प्रोक्तमधीयते ये ते आथर्वणिकाः । वसन्तादिभ्यष्ठक् । तेषां समाम्नायः । "आथर्वणिकस्येकलोपश्च" आथर्वणः । तस्य वेदस्य शेष इत्युपदिशन्ति धर्मज्ञाः—या विद्या स्त्रीषु शूद्रेषु चेति ॥ १२ ॥

कृच्छ्रा धर्मसमाप्तिस्समाम्नानेन लक्षणकर्मणा तु समाप्यते ॥ १३ ॥

---

१. तं दण्डयेत् इति क. पु. २. म. स्मृ. ८. १०८. ३. उक्तवाक्यस्य इति. च. पु. ४. ऋणं दाप्यो दमं च सः इति. च. पु. मुद्रितपुस्तकेषु च। ५. म. स्मृ. ८. ३१८.

समाम्नानं प्रतिपदपाठः । तेन धर्मसमाप्तिः कृच्छ्रा न शक्या कर्तुम् । किं तु लक्षणकर्मणा समाप्यते येन सामान्येन भिन्नानामप्यधिगमो भवति तल्लक्षणं, तस्य कर्मणा करणेन समाप्यते । कर्मणात्विति द्वितकारपाठोऽयमार्षः । आदिति वा निपातस्य प्रश्लेषः । स च सद्य इत्यस्यार्थे द्रष्टव्यः ॥ १३ ॥

तत्र लक्षणम् ॥ १४ ॥

**सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत एवमुभौ लोकावभिजयति ॥ १५ ॥**

पूर्वेण गतम् ॥ १५ ॥

**स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥ १६ ॥**

उक्तव्यतिरिक्ता ये धर्मास्ते धर्मशेषास्तान् स्त्र्यादीनामपि सकाशात् प्रतीयादित्येके मन्यन्ते । ते च प्रतिजनपदं प्रतिकुलं च भिन्नास्तथैव प्रतिपत्तव्याः । तत्र द्राविडाः कन्यामेषस्थे सवितर्यादित्यपूजामाचरन्ति भूमौ मण्डलमालिख्य, इत्यादीन्युदाहरणानि । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥

इत्यापस्तम्बधर्मसूत्रवृत्तौ द्वितीयप्रश्ने एकोनत्रिंशी कण्डिका ॥ २९ ॥

---

इति चाऽऽपस्तम्बधर्मसूत्रवृत्तौ श्रीहरदत्तमिश्रविरचितायामुज्ज्वलायां द्वितीयप्रश्ने एकादशः पटलः ॥ ११ ॥

---

## समाप्तो द्वितीयः प्रश्नः ॥

---

**समाप्तमिदमुज्ज्वलोज्ज्वलितमापस्तम्बधर्मसूत्रम् ॥**

# अशुद्धसंशोधनम् ॥

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| सस्मवे | सम्भवे | ६ | १६ |
| यजुष्यवि | यजुष्पवि | १० | १४ |
| मूलोदसंकशो | मूलोदकसंज्ञो | ,, | ,, |
| इहाष्यजिन | इहाप्यजिन | १७ | १३ |
| आप ग० | आप० गृ | १७ | २६ |
| इष्टापूतसुंकृत | इष्टापूर्तसुकृत | २० | २६ |
| च्छुतिविप्रति | च्छ्रुतिविप्रति | २४ | ३ |
| मेघोहरण | मेधाहरण | २५ | १४ |
| दृष्टार्थमदृष्टादृष्टार्थं | दृष्टार्थमदृष्टार्थं | ,, | १५ |
| कर्माण्यारमने | कर्माण्यारभते | २७ | २१ |
| आचाचार्यकुले | आचार्यकुले | २८ | १३ |
| प्रथमप्रश्न | प्रथमप्रश्ने | ,, | २० |
| विरचितया | विरचिताया | ,, | १९ |
| पुरुषात | पुरुषात् | २९ | ११ |
| तपस्व्यज | तपस्व्यृजु | ३२ | १६ |
| आत्मानिन्दा | आत्मनिन्दा | ४३ | १३ |
| यीतेति (२९) विशष | यतीति (२८) विशेष | ४४ | २३ |
| उपालक्षानि | उपलिक्षानि | ४५ | ८ |
| उपलिसकेश | उपलिसकेश | ,, | ,, |
| अनभिभाषित्तो | अनभिभाषितो | ४७ | १२ |
| निर्गमनामर्गा | निर्गमनमार्गं | ५२ | २ |
| शूद्रापतित | शूद्रपतित | ,, | १६ |
| दत्रद्रष्टव्यः | अत्र द्रष्टव्यः | ५३ | २७ |
| द्विताया | द्वितीया | ५४ | १६ |
| चो रादीनां | चोरादीनां | ५५ | १ |
| कार्तिकं | कार्तिको | ,, | १४ |
| ।वधिरयं | विधिरयं | ५६ | ११ |
| चाऽऽमातृकस्य | चाऽमातृकस्य | ६० | १४ |
| नुलेखणा | नुलेपणा | ६२ | १० |
| ॥ २९ ॥ | ॥ १९ ॥ | ६३ | १२ |
| मीहीरे | नीहारे | ६३ | २१ |
| सर्वासा | सर्वासां | ६४ | १० |
| पुच्छवन्नन्ताम् | पुच्छवन्नक्षत्रम् | ,, | २४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| कर्मभिर्वृद्धानां | कर्मभिर्वृद्धानां | ७३ | १९ |
| वक्तव्या | वक्तव्या | ७६ | १४ |
| पुस्तकाति | पुनस्तानि | ७७ | ,, |
| त्तिवर्ष पूर्वः | त्तिवर्षपूर्वः | ७९ | २९ |
| सर्वानद्या | सर्वानद्यो | ८४ | १ |
| इद्यस्य | उद्यस्य | ,, | २२ |
| नमवत्येव | नभवत्येव | ,, | २७ |
| सुतिकादेक्या | सूतिकोदक्या | ८६ | २० |
| अन्थेषु | अन्येषु | ८७ | ,, |
| लेपानुच्छिष्टानष्युच्छि | लेपानुच्छिष्टानष्युच्छि | ८८ | २४ |
| स्पर्शनमात्र | स्पर्शनमात्रं | ,, | २६ |
| मूषिकलांगं बा | मूषिकलांगं वा | ९४ | ६ |
| वचनाद्दित्वा | वचनाद्विवा | ,, | २३ |
| कुत्सयिवा | कुत्सयित्वा | ९६ | २४ |
| पाकनोम्ली | पाकेनाम्ली | ९७ | ६ |
| सलावृक्या | सलावृक्या | ,, | २० |
| तत,न्तैव | तत्तत्रैव | ,, | ३० |
| वृन्दचाराः | वृन्दचराः | १०० | ६ |
| लक्ष्मणवजं | लक्ष्मणवर्जम् | ,, | ७ |
| धरादिस्त्रव्यञ्जनया | धरादिस्त्रीव्यञ्जनया | १०३ | २४ |
| भोक्तव्यं | भौक्तव्यं | १०४ | १ |
| दक्षणीयेष्टिः | दीक्षणीयेष्टिः | १०६ | १७ |
| ताएते | त एते | १०७ | २२ |
| अभाज्यान्नोः | अभोज्यान्नाः | ,, | २६ |
| क्ष्वधर्मेण | स्वधर्मेण च | १०८ | १ |
| वंशामन्वन्तराणि | वंशो मन्वन्तराणि | ११० | २ |
| स्तदलाभे | तदलाभे | ११४ | ११ |
| ब्रह्म | ब्रह्म | ११७ | ,, |
| कार्यमीवद्या | कार्यमविद्या | १२२ | ८ |
| अम्नावव्यस्यन्ते | अम्नावक्ष्यस्यन्ते | १२४ | २६ |
| मपस्य | मपास्य | १२५ | २१ |
| सर्व एव | सर्वं एव | १२६ | २७ |
| स्वकयि | स्वकीय | १२७ | ४ |
| येऽनुऽतिष्ठन्तीति | येऽनुतिष्ठन्तीति | १२८ | १० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| मेतदिति | एतदिति | ,, | २७ |
| विसोर्णायां | बिसोर्णायां | १३३ | २२ |
| घटादेरिव | घटादेरिव | १३४ | २ |
| पृथिव्या | पृथिव्या | ,, | १९ |
| निहन्तुम् | निर्हन्तुम् | १३९ | ३० |
| करणापेशमः | करणोपशमः | १३७ | ८ |
| अविरोलक्षगा | अविरोधलक्षणा | ,, | १३ |
| ऐकाप्यम् | ऐकाग्रयम् | १३९ | ५ |
| स्वाक्ष्यनृतम् | साक्ष्यनृतम् | ,, | १३ |
| निघातार्थादि | निर्घातार्थानि | १४० | ९ |
| प्रदेशामाच्छाद्य | प्रदेशमाच्छाद्य | १४२ | १० |
| प्रवृत्तस्य | प्रवृत्तस्य | १४३ | २४ |
| शाक्त्या | शक्याः | १४८ | १३ |
| ततत्र्यहम् | ततस्त्र्यहम् | १९३ | ८ |
| कृच्छ | कृच्छ | ,, | ९ |
| हरीतौ | हारीतौ | १९९ | २ |
| सव्यवहारो | संव्यवहारो | १९६ | ५ |
| लच्छास | उच्छ्वास | १९८ | १३ |
| खटाङ्गं | खट्वाङ्गम् | १९९ | ९ |
| ,, | ,, | ,, | २२ |
| भ्रणहा | भ्रूणहा | ,, | २३ |
| चक्रम्येत | चंक्रम्येत | ,, | २४ |
| स्वटांगस्य | खट्वाङ्गस्य | ,, | २५ |
| विप्रजत | विप्रव्रजत | १६२ | १ |
| द्वहान् | द्व्यहान् | १६२ | १७ |
| वपेरन् (७-७) | वपेरन् (१०-७) | १६४ | १ |
| काल (१०-७) | काल (७-७) | ,, | ,, |
| मन्यते | मन्यन्ते | ,, | १६ |
| उच्यते | उच्यन्ते | १६५ | १ |
| नित्षेति | नीत्वेति | ,, | २ |
| अहिताग्नि | आहिताग्नि | १६६ | ८ |
| पयस्विनीभवति | पयस्विनी न भवति | १७० | ५ |
| च्छ्यरतत्वेन | च्छ्यन्तत्वेन | ,, | ७ |
| प्रशस्तं | प्रशस्तं | ,, | १३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अस्तंयस्तं | अस्तं यन्तम् | १७१ | ८ |
| वर्जयेत्पात्रस्थ्य | वर्जयेत्पात्रस्थ | १८० | १७ |
| स्त्र्युपगार्थं | स्त्र्युपभोगार्थं | १८२ | १४ |
| शषाणि | शेषाणि | १८३ | १८ |
| गर्माधानादि | गर्भाधानादि | १८४ | ४ |
| चण्डालोपम्स्पर्श | चण्डालोपस्पर्श | १८६ | १ |
| पक्कमक्कम् | पक्कमपक्कम् | १८७ | २१ |
| प्रथमयोगः | प्रथमप्रयोगः | १८८ | २ |
| स्वाहत्येताभ्यां | स्वाहेत्येताभ्याम् | १९० | ४ |
| अवोक्षत् | अवोक्षेत | १९४ | १४ |
| मुद्दिव्या | मुद्दिश्या | २०१ | ,, |
| मित्येकै | मित्येके | २०२ | ४ |
| माथर्वणिकानां | माथर्वणिकानां | २०७ | ६ |
| ब्रवाणः | ब्रुवाणः | २०७ | १६ |
| मधुपका | मधुपर्का | २०८ | १७ |
| भातरि | मातरि | २१२ | ६ |
| नव्वंसयोग | नाव्वसंयोग | २१४ | ९ |
| राजनं | राजानं | २१६ | १६ |
| शास्त्रोष्वर्थ | शास्त्रेष्वर्थ | ,, | २० |
| द्दारनग्नींश्च | द्दारानग्नींश्च | २२० | ३ |
| आवहरेन् | आवहेरन् | २२४ | १ |
| यस्मिन्नुदति | यस्मिन्नुदेति च | २२६ | २३ |
| स्वपन्नोभीनम्रुक्तो | स्वपन्नभिनिम्रुक्तो | ,, | २५ |
| अपरद्युः | अपरेद्युः | ,, | २६ |
| गृह्णायात् | गृह्णीयात् | २३१ | २१ |
| प्रातगृह्णीयात | प्रतिगृह्णीयात् | ,, | २२ |
| धमार्थं | धर्मार्थं | २३२ | १६ |
| वेश्यनि | वेश्मनि | २३६ | ३२ |
| प्रवर्तग्ये | प्रवर्तन्ते | २३८ | ९ |
| पुवमतेषु | एवमेतेषु | ,, | २६ |
| प्राप्तयिद्यो | प्राप्तविद्यो | २३९ | ९ |
| सन्यते | मन्यन्ते | २४२ | ४ |
| ज्यष्ठं | ज्येष्ठं | २४२ | २३ |
| समानाधि | सामानाधि | २४७ | १६ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| शाद्ध | श्राद्ध | २४९ | ४ |
| वा ग्राणसस्य | वाभ्राणसस्य | २६३ | ६ |
| सम्भुअतीति | सम्भुञ्जती | २६४ | ३३ |
| अपरेद्यः | अपरेद्युः | ,, | २४ |
| ग्रासावराऽर्य्यस्य | ग्रासवराऽर्य्यस्य | २६५ | १६ |
| अधीष्टेच | अधीष्टेचे | २६६ | ४ |
| श्वित्रश्वित्री | श्वित्रश्श्वित्री | ,, | १८ |
| ११६ | १६६ | ,, | २८ |
| ६७ | ६६ | ,, | ३१ |
| शाखासु | शाखासु | २६७ | ११ |
| द्व्रय | द्रव्य | ,, | १७ |
| व्योनादान | व्यानोदान | ,, | २९ |
| अनग्गि | अनग्नि | २६० | २ |
| केशाश्मश्रु | केशश्मश्रु | ,, | १६ |
| कारयेत्पति | कारयेत्प्रति | २६१ | ,, |
| ब्राह्मणन्भु | ब्राह्मणान्भु | २६२ | १ |
| मुख्य | मुख्यः | ,, | २४ |
| वर्षादनि।म | वर्षादीनाम | २६४ | २० |
| समिद्धोग्नि भस्म | समिद्धोग्निर्भस्म | २७२ | ११ |
| त्येतश्नाऽस्ति | त्यतन्नास्ति | २७५ | २ |
| द्वन्द | द्वन्द्वं | ,, | २१ |
| त्रैवृद्धविद्धानां | त्रै विद्यवृद्धानां | २७८ | २३ |
| स्त्रेविद्य | स्त्रैविद्य | २७९ | २ |
| प्रजापर्ति | प्रजार्ति | २८० | ४ |
| अमरमणं | अमृतममरणं | ,, | ४ |
| त्व | त्वं | ,, | ५ |
| षट्विंशी | षड्विंशी | २८९ | ९ |
| नियुङ्क् | नियुङ्क्ते | ,, | १७ |
| दुवलेन्द्रया | दुर्बलेन्द्रिया | २९० | ५ |
| आरभ्यत | आरभ्यते | ,, | २० |
| दश | देशे | ,, | २९ |
| च्छदन | च्छेदन | २९१ | ४ |
| धार्मिके | धार्मिकं | २९२ | ९ |
| आचार्यादयादि | आचार्यादयोपि | २९३ | १६ |
| चावेराधन | चावरोधन | २९४ | २१ |

# उज्वलायामुद्धृतानां ग्रन्थान्तरवाक्यानां प्रतीकसूची ॥

इति ॥

---

(१) अत्रोज्वलाकारेण विष्णूक्तत्वेन यानि वचनान्युदाहृतानि तेष्वेकमपि वचनं पुण्यपत्तनमुम्बईमुद्रितस्मृतिसमुच्चयान्तर्गतविष्णुस्मृतौ श्लोकात्मिकायां नोपलभ्यते, किन्तु या कलिकातनगरे पृथक् विष्णुस्मृतिर्मुद्रिता गद्यपद्यात्मिका तत्र सर्वाणि वचनान्युपलभ्यन्ते । इयमेव च गौतमवसिष्ठपराशरस्मृतीर्मुक्त्वाऽन्यासां सर्वासां तदीयानां स्मृतीनां दशा । अतो नेमास्स्मृतयः तत्तन्निबन्धनकारैरुद्धृताः । याश्चोद्धृता नैतास्ता इति स्पष्टमवगम्यते ।

॥ श्रीः ॥

# श्रीमदापस्तम्बधर्मसूत्रगतानां पदानां सूची ॥



* एतच्चिह्नाङ्कितानि पदानि सूत्रारम्भकाणि । तत्रैकंपदमे एकत्रैव सूत्रारम्भकं, तत्र तत्पदस्यादावेव चिह्नं कृतम् । यदि बहुत्र, तदा तत्सूत्रसंख्यासमीपे चिह्नं कृतम् । अत्र संख्यात्रयं वर्तते । प्रथमसंख्या प्रश्नावबोधिका । द्वितीयसंख्या कण्डिकाविषयिणी । तृतीयसंख्या सूत्रावमर्शिनी । यत्तु पदमेकस्यामेव कण्डिकायां वारद्वयं वारत्रयं वाऽऽवर्तते तत्र सूत्रसंख्यैव दत्तेति वेदितव्यम् ।

* एतच्चिह्नार्थः एतत्सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

---

* एतद्विशदार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

ख



ग



* एतद्विशेषार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

प



* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतद्विवरणार्थं सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

भ



* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूत्रादौ टिप्पण्यां द्रष्टव्यः।

---

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः।

### ह



* एतद्विवार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

शुभमस्तु

* एतच्चिह्नार्थः सूच्यादौ टिप्पण्यां द्रष्टव्यः ।

# काशी संस्कृत सीरिज़— ग्रन्थमाला

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः। प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः म० म० पं० श्री नित्यानन्दपन्तपर्वतीय विरचितः। [कर्मकाण्ड वि० ६] रु० १–८

६७ सांख्यदर्शनम्। श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम्। [सांख्य वि० १] रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः। आचार्यश्रीहेमचन्द्रेण विरचितः। [कोश वि० २] रु० २–०

६९ शिशुपालवधम्। श्रीमन्माघकविनिर्मितं श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया महामहोपाध्याय श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया समेतम्। सजिल्द् ग्लेज कागज। सम्पूर्णम्। [काव्य वि० ९] रु० ३–०

६९ " " रफ मोटा कागज [सम्पूर्णम्] रु० २—४

७० जागदीशीपञ्चलक्षणी सिंहव्याघ्रलक्षणं च। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादिविभूषितं च। [न्याय वि० ९] रु० ०—८

७१ (१) ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमोभागः। [वेदान्तविभागे ९] रु० २—८

७१ [२] ब्रह्मसूत्रशाङ्करभाष्यम्। श्री गोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। द्वितीयाध्यायस्य तृतीयपादमारभ्य समाप्तिपर्यन्तम्। द्वितीयोभागः। [वेदान्त वि० ९] रु० २—८

७२ [१]–सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। "गणिताध्यायः" वासनाभाष्य सहितः ज्योतिषाचार्य म० म० सी ६ मद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। [ज्यो० वि० ४] रु० २—०

७२–[२]–सिद्धान्तशिरोमणिः। " " "गोलाध्यायः" वासनाभाष्य सहितः। ज्योतिषाचार्य म० म० श्री ६ मद्बापूदेवशास्त्रि कृत टिप्पणी सहितः। [ज्यो० वि० ४] रु० २—०

७३ काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पादितम्। पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। [आयुर्वेद शास्त्रविभागे १] रु० ०—८

७४ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम्। [सर्गत्रयमात्रम्]। [काव्य वि० १०] रु० ०—१२

७५ चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहित्याचार्येण विरुते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः। [अलङ्कार वि० ३] रु० ०—१०

७६ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम्। [सर्गत्रयमात्रम्] [काव्य वि० ११] रु० ०—६

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः। [न्यायविभागे १०] रु० ३—०